# श्रीवेदव्यासाष्टकम्

{॥ श्रीवेदव्यासाष्टकम् ॥}

कलिमलास्तविवेकदिवाकरं समवलोक्य तमोवलितं जनम् ।
करुणया भुवि दर्शितविग्रहं मुनिवरं गुरुव्यासमहं भजे ॥ १॥

भरतवंशसमुद्धरणेच्छया स्वजननीवचसा परिनोदितः ।
अजनयत्तनयत्रितयं प्रभुः शुकनुतं गुरुव्यासमहं भजे ॥ २॥

मतिबलादि निरीक्ष्य कलौ नृणां लघुतरं कृपया निगमाम्बुधेः ।
समकरोदिह भागमनेकधा श्रुतिपतिं गुरुव्यासमहं भजे ॥ ३॥

सकलधर्मनिरूपणसागरं विविधचित्रकथासमलङ्कृतम् ।
व्यरचयच्च पुराणकदम्बकं कविवरं गुरुव्यासमहं भजे ॥ ४॥

श्रुतिविरोधसमन्वयदर्पणं निखिलवादिमतान्ध्यविदारणम् ।
ग्रथितवानपि सूत्रसमूहकं मुनिसुतं गुरुव्यासमहं भजे ॥ ५॥

यदनुभाववशेन दिवङ्गतः समधिगम्य महास्त्रसमुच्चयम् ।
कुरुचमूमजयद्विजयो द्रुतं द्युतिधरं गुरुव्यासमहं भजे ॥ ६॥

समरवृत्तविबोधसमीहया कुरुवरेण मुदा कृतयाचनः ।

सपतिसूतमदादमलेक्षणं कलिहरं गुरुव्यासमहं भजे ॥ ७॥

वननिवासपरौ कुरुदम्पति सुतशुचा तपसा च विकर्शितौ ।

मृततनूजगणं समदर्शयन् शरणदं गुरुव्यासमहं भजे ॥ ८॥

व्यासाष्टकमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् ।

यः पठेन्मनुजो नित्यं स भवेच्छास्त्रपारगः ॥

Encoded and proofread by Sunder Hattangadi sunderh at hotmail.com

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org

Veda Vyasa Ashtakam Lyrics in Devanagari PDF
% File name : vyasa-8.itx
% Category : aShTaka
% Location : doc_deities_misc
% Author : ?
% Language : Sanskrit
% Subject : philosophy/religion/hinduism
% Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)
% Proofread by : Sunder Hattangadi (sunderh at hotmail.com)
% Description-comments : Homage to Veda Vyasa
% Latest update : August 25, 2007
% Send corrections to : Sanskrit@cheerful.com
% Site access : http://sanskritdocuments.org
%
% This text is prepared by volunteers and is to be used for personal study